त्यावर्त्तान् दृष्टान्तान् कषायांश्च तदार्ष्टान्तिकानभिधित्सुः सूत्रद्वयमाह–सुगमं चैतत्, नवरं खरो–निष्ठुरोऽतिवेगितया
पातकश्छेदको वा आवर्त्तनमावर्त्तः स च समुद्रादेश्चक्रविशेषाणां वेति खरावर्त्तः, उन्नतः–उच्छ्रितः स चासावावर्त्तश्चेति
उन्नतावर्त्तः, स च पर्वतशिखरारोहणमार्गस्य वातोत्कलिकाया वा, गूढश्चासावावर्त्तश्चेति गूढावर्त्तः स च गेन्दुकदवर-
कस्य दारुग्रन्थ्यादेर्वा आमिषं–मांसादि तदर्थमावर्त्तः शकुनिकादीनामामिषावर्त्त इति, एतत्समानता च क्रोधादीनां
क्रमेण परापकारकरणदारुणत्वात् पत्रतृणादिवस्तुन इव मनस उन्नतत्वारोपणात् अत्यन्तदुर्लक्ष्यस्वरूपत्वात् अनर्थ-
शतसम्पातसङ्कुलेऽप्यवपतनकारणत्वाच्चेति, इयञ्चोपमा प्रकर्षवतां कोपादीनामिति तत्फलमाह—'खरावत्तेत्या'दि, अशु-
भपरिणामस्याशुभकर्मबन्धनिमित्ततया दुर्गतिनिमित्तत्वादुच्यते 'णेरइएसु उववज्जइ'त्ति ॥

अणुराहानक्खत्ते चउत्तारे पं० पुव्वासाढे एवं चेव उत्तरासाढे एवं चेव (सू० ३८६) जीवाणं चउठाणनिव्वत्तिते पोग्गले पावकम्मत्ताते चिणिंसु वा चिणंति वा चिणिस्संति वा, नेरतियनिव्वत्तिते तिरिक्खजोणितनिवत्तिते मणुस्स० देवनिव्वत्तिते, एवं उवचिणिंसु वा उवचिणति वा उवचिणिस्संति वा, एवं चिय उवचिय वंध उदीर वेत तह निज्जरे चेव। (सू० ३८७) चउपदेसिया खंधा अणंता पन्नत्ता चउपदेसोगाढा पोग्गला अणंता चउसमयट्ठितीया पोग्गला अणंता चउगुणकालगा पोग्गला अणंता जाव चउगुणलुक्खा पोग्गला अणंता पण्णत्ता (सू० ३८८) ॥ चउत्थो उद्देसो समत्तो चउठाणं चउत्थमज्झयणं समत्तं ॥

नारका अनन्तरमुक्तास्तैश्च वैक्रियादिना समानधर्माणो देवा इति तद्विशेषभूतनक्षत्रदेवानां चतुःस्थानकं विवक्षुः

अणुराहेत्यादि सूत्रत्रयमाह—कण्ठ्यञ्चैतदिति । देवत्वादिभेदश्च जीवानां कर्मपुद्गलचयादिकृत इति तत्प्रतिपादनायाह—'जीवाण'मित्यादि सूत्रषट्कं, व्याख्यातं प्राक् तथापि किञ्चिल्लिख्यते, 'जीवाणं'ति णंशब्दो वाक्यालङ्कारार्थः, चतुर्भिः स्थानकैः—नारकत्वादिभिः पर्यायैर्निर्वर्त्तिताः—कर्मपरिणामं नीतास्तथाविधाशुभपरिणामवशाद्बद्धास्ते चतुःस्थाननिर्वर्त्तितास्तान् पुद्गलान्, कथं निर्वर्त्तितानित्याह—पापकर्मतया—अशुभस्वरूपज्ञानावरणादिरूपत्वेन, 'चिणिंसु'त्ति तथाविधापरकर्मपुद्गलैश्चितवन्तः—पापप्रकृतीरल्पप्रदेशा बहुप्रदेशीकृतवन्तः, 'नेरइयनिव्वत्तिए'त्ति नैरयिकेण सता निर्वर्त्तिता इति विग्रहः, एवं सर्वत्र, तथा 'एवं उवचिणिंसु'त्ति चयसूत्राभिलापेनोपचयसूत्रं वाच्यं उवचिणिंसुत्ति—उपचितवन्तः पौनःपुन्येन 'एव'मिति चयादिन्यायेन बन्धादिसूत्राणि वाच्यानीत्यर्थः, इह च 'एवं बन्धउदीरे'त्यादिवक्तव्ये यच्चयोपचयग्रहणं तत्स्थानान्तरप्रसिद्धगाथोत्तरार्द्धानुवृत्तिवशादिति, तत्र 'बंध'त्ति बंधिंसु २ श्लथबन्धनबद्धान् गाढबन्धनबद्धान् कृतवन्तः २, 'उदीर'त्ति उदीरिंसु २ उदयप्राप्ते दलिके अनुदितांस्तान् आकृष्य करणेन वेदितवन्तः २, 'वेय'त्ति वेदिंसु २ प्रतिसमयं स्वेन रसविपाकेनानुभूतवन्तः २ 'तह निज्जरा चेव'त्ति निज्जरिंसु २ कार्त्स्न्येनानुसमयमशेषतद्विपाकहान्या परिशातितवन्तः २ इति । पुद्गलाधिकारात् पुद्गलानेव द्रव्यादिभिर्निरूपयन्नाह—'चउप्पएसे'त्यादि सुगममिति ॥

इति चतुःस्थानकस्य चतुर्थ उद्देशकः समाप्तः ॥ ग्रन्थाग्रं २९३२

॥ इति श्रीमदभयदेवाचार्यविरचिते स्थानाख्यतृतीयाङ्गविवरणे चतुःस्थानकाख्यं चतुर्थमध्ययनं समाप्तम् ॥